हेममया शिलापट्टका उपयुज्यन्ते, तत उपचारेण हेमवन्तीत्युक्तम् । नित्यं हेम-प्रकाशयति,ततो हेम नित्ययोगि प्रशस्यं चाऽस्यास्तीति हेमवत्, हेमवत एव हैमवतम्, प्रज्ञादेराकृतिगणतया 'प्रज्ञादिभ्यः' ( श्रीसिद्ध०अ०७पा०२सू० १६४ ) इति स्वार्थेऽण्प्रत्ययः, हैमवतश्चात्र देवो महर्द्धिकः पल्योपमस्थितिकः परिवसति,तेन तद्योगाद्धैमवतमिति व्यपदिश्यते । हैमवतो देवः स्वामित्वेनास्यास्तीति, * अभ्रादित्वादप्रत्ययो वा । जं० ४ वक्ष० ।

हेमवयकूड-हैमवतकूट-न० । हैमवद्वर्षेशसुरकूटे,जं०४वक्ष० । जम्बूद्वीपे हिमवद्वर्षधरपर्वते स्वनामख्याते कूटे, स्था० २ ठा० ३ उ० ।

हेमविमलसूरि-हेमविमलसूरि-पुं० । हीरविजयसूरिगुरोः आनन्दविजयसूरेः गुरौ सोमसुन्दरसूरिशिष्ये, ग० ३ अधि० ।

हेमसंभवा-हेमसंभवा-स्त्री० । हेमकूतराजस्य भार्यायाम्,वृ० ४ उ० । ( बालिकासु अत्यन्तं गृद्धस्य अस्याः पुत्रस्य वेदोपघातो जातः, तद्वृत्तम् 'उवघायपडग' शब्दे द्वितीयभागे निरूपितम् । )

हेमसरोवर-हेमसरोवर-न० । स्वनामख्याते तीर्थे, यत्र द्वासप्ततिर्जिनालयाः । ती० ४३ कल्प ।

हेमसुत्तग-हेमसूत्रक-न० । हेममङ्कलके, आ० १ श्रु० १ अ० ।

हेर-हेर-पुं० । माराडव्यगोत्रे गोत्रविशेषप्रवर्त्तके च ऋषौ,तदपत्येषु च । स्था० ७ ठा० ३ उ० ।

हेरंब-देशी-महिष-डिण्डिमयोः, दे० ना० ८ वर्ग ७६ गाथा । पाइ० ना० ।

हेरमवय-हैरण्यवत्-पुं० । जम्बूद्वीपे स्वनामख्याते वर्षक्षेत्रे, स्था० ६ ठा० ३ उ० । जं० । प्रज्ञा० । रुक्मिवर्षधरे अष्टकूटानां मध्ये सप्तमे कूटे, स्था० २ ठा० ३ उ० ८७ सूत्र टी० ।

दो हेरमवयाइं (सूत्र-९२+) । स्था० २ ठा० ३ उ० । ( अस्य ) व्याख्या 'हरिए' शब्दे जम्बूद्वीपप्रज्ञप्ति (१११) सूत्रेण षष्ठे भागे गतार्था ।

हेरमवयकूड-हैरण्यवतकूट-न० । शिखरिवर्षधरपर्वतस्य कूटे, स्था० २ ठा० ३ उ० । हैरण्यवतक्षेत्राधिपसत्के रुक्मिवर्षधरकूटे, जं० ४ वक्ष० ।

हेरमिय-हैरण्यिक-पुं० । स्वर्णकारे, आ० म० १ अ० । नं० ।

हेरिंब-देशी-गणेशे, दे० ना० ८ वर्ग ७२ गाथा ।

हेरिय-हैरिक-पुं० । उद्भ्रामके, कल्प० १ अधि० ६ क्षण ।

हेरुयाल-हरुताल-पुं० । वृक्षविशेषे, ज्ञा० १ श्रु० ६ अ० । जं० ।

हेला-हेला-स्त्री० । लीलायाम् , जीवा० १६ अधि० । पाइ० ना० । वेगे, दे० ना० ८ वर्ग ७१ गाथा । अनादरे, पाइ० ना० १६२ गाथा ।

हेलियामच्छ-हेलिकामत्स्य-पुं० । मत्स्यभेदे, जी० १ प्रति० ।

हेलुअ-देशी-छिक्कायाम् , दे० ना० ८ वर्ग ७२ गाथा ।

हेलुका-देशी-छिक्कायाम् , दे० ना० ८ वर्ग ७२ गाथा ।

हेल्लि-हेसखि-सम्बो०। हेसखि इत्यस्य हेल्लि इति निपात्यते । सख्या आमन्त्रणे, 'हेल्लि म झंखहि आलु' । प्रा० ४ पाद ।

हेवाग-हेवाक-पुं० । स्वभावे, स्था० ४ ठा० ४ उ० । अभ्यासे च । नि० चू० १ उ० ।

हेव्वस-पुं० । पारसीकः शब्दः । अलाउद्दीनसुरत्राणस्य मल्लिके, " कलिकालदुल्ललिअवसेण अलाउद्दीनसुरत्ताणस्स मल्लिकेण 'हेव्वस' नामेणं । " ती० ३५ कल्प ।

हेसिय-ह्रेषित-न० । हयशब्दे, अनु० । जं० ।

हेहभूय-हेहभूत-न० । गुणदोषपरिज्ञानविकलेऽशठभावे, व्य० १ उ० ।

हेहय-हैहय-पुं० । स्वनामख्याते क्षत्रियराजे, आव० ४ अ० ।

हो-हो-अव्य० । विस्मये, पाइ० ना० २७४ गाथा ।

होअऊण-भूत्वा-अव्य० । " स्वराद्नतो वा " ॥८।४।२४० ॥ इति अकारागमो वा । होअऊण । होऊण । भूत्वा । उत्पद्येत्यर्थे, प्रा० ८ अ० ४ पाद ।

होउकाम-भवितुकाम-पुं० । मोक्षार्थिनि भव्यसत्त्वे, पं० सू० १ सूत्र ।

होन्त-भवत्-त्रि० । " शत्रानशः " ॥ ८ । ३ । १८१ ॥ इति शतृप्रत्ययस्थाने न्तः । प्रा० । जायमाने, विशे० ।

होड-होढ-पुं० । मोषे, ज्ञा० १ श्रु० २ अ० ।

होत्ता-भूत्वा-अव्य० । "क्त्व इअ-दूणौ" ॥ ८ । ४ । २७१ ॥ इति क्त्वाप्रत्ययस्य इय-दूणौ वा भवतः । होत्ता । उत्पद्येत्यर्थे, प्रा० ८ अ० ४ पाद ।

होत्तिय-हौत्रिक-पुं० । अग्निहोत्रिके, भ० १ श० ५ उ० । औ० । तृणवनस्पतिविशेषे, प्रज्ञा० १ पद ।

होत्था-अभवत्-क्रिया० । जात इत्यर्थे,विपा० १ श्रु० १ अ० ।

होदूण-भूत्वा-अव्य० । भू-क्त्वा । "क्त्व इय-दूणौ" ॥८।४। २७१॥ इति क्त्वास्थाने दूणादेशः । उत्पद्येत्यर्थे, प्रा० ४ पाद ।

होन्तो । अभविष्यत् । " न्त-माणौ " ॥ ८ । ३ । १८० ॥ इति न्ताऽऽदेशः । होन्तो । होमाणो । अभविष्यदित्यर्थे, प्रा० ८ अ० ३ पाद ।

होम-होम-पुं० । अग्निहोतृभिः क्रियमाणे अग्निहोमे, अनु० । नि० चू० । पं० व० ।

होयव्व भवितव्य-न० । भाव्ये, पञ्चा० ४ विव० । आ० म० । नि० चू० ।

होया-होतृ-पुं० । होतरि, अग्नौ हविःप्रदातरि, ज्ञा० १ श्रु० १ अ० ।

---

* " अभ्रादिभ्यः " ॥ ७ । २ । ४६ ॥

होरंभा-होरम्भा-स्त्री० । महाढक्कायाम्, रा० । तं० । भ० ।

होरण-देशी-वस्त्रे, दे० ना० ८ वर्ग ७२ गाथा ।

होरा-होरा-स्त्री० । ज्योतिषोक्ते लग्ने राश्यर्द्धभागे होराप्रकाशकशास्त्रभेदे, रेखायाञ्च । द० प० । सूत्र० ।

होल-देशी-देशप्रसिद्धे नैष्ठुर्ये, दश० ७ अ० । आ० । होल इति वा गोल इति वा एतौ च देशान्तरे अवज्ञासंसूचकौ । आचा० २ श्रु० १ चू० ४ अ० १ उ० ।

होलवाय-होलवाद-पुं० । होलत्येवं वादो होलवादः । होले-त्येवं पुरुषामन्त्रणे, सूत्र० १ श्रु० ६ अ० ।

ह्व-ह्व-अव्य० । वाक्यालङ्कारे, सूत्र० २ श्रु० ७ अ० ।

ह्सा-स्नुषा-स्त्री० । पुत्रवध्वाम्, सूत्र० २ श्रु० ७ अ० ।

ह्व-ह्व-देशी-साङ्केतिकः शब्दः । चतुष्के,ह्वशब्दोपादानात् नारकातिर्यङ्नरदेवाश्चत्वारो ग्राह्याः । ग० २ अधि० । नि० चू० ।

वासे पुंएणारसंकचन्दपमिए चित्तम्मि मासे वरे,
हत्थे मे सुहतेरसीबुहजुए पक्खे य सुक्के गए ।
सम्मं संकलिओ य सूरयपुरे संपुण्णयं संगओ,
राइंदायरिएण देउ जुवणे राइंदकोसो सुहं ॥ १ ॥

## अथ प्रशस्तिः--

शाखाप्रशाखाभिरतिप्रवृद्धे, वीरोक्तिविस्तारविधानदक्षे ।
सद्धर्म्यसौधर्मबृहत्तपाऽऽख्य-गच्छे जगत्यां जनितप्रतिष्ठे ॥ १ ॥
श्रुतावगाहप्रवरा महान्तः, सच्छासनाऽशेषधुरं वहन्तः ।
श्रीसङ्घवाटीं परिफुल्लयन्तः, सूरीन्द्रमुख्या बहवो बभूवुः ॥ २ ॥
तदन्वयेऽभूद् वररत्नसूरिः, स्वब्रह्मतेजस्वितया करिष्णुः ।
भानुं नभोगं हरिमब्धिवासं, त्रिषट्तमं पट्टमलङ्करिष्णुः ॥ ३ ॥
निरन्तराऽऽचाम्लकरः सुखेन, क्षमा-श्रुत-प्राज्यमतिप्रवृद्धः ।
वृद्धक्षमासूरिरलञ्चकार, तत्पट्टमेरुं सवितेव धीरः ॥ ४ ॥

स्वपरसमयवेदी षट्सु भाषासु दक्षो,
विजितयवनवृन्दो मेदपाटीयजन्तुः ।
सदसि जनसमक्षं श्रीलदेवेन्द्रसूरिः,
समभवदतितेजाः पट्टकेऽमुष्य जिष्णुः ॥ ५ ॥

शिश्राय तत्पट्टमशेषकाल-विन्मारजिस्त्वाऽन्यशुभं करिष्णुः ।
नैमित्तिकानां प्रथमश्च लोके, कल्याणसूरिर्गणितप्रवीणः ॥ ६ ॥
अन्वर्थनामा समभूत् प्रमोद-सूरिर्जगज्जीवसुमोदहेतुः ।
समाधिलीनो निजकर्मदक्ष-स्तदासनेऽखण्डितशीलशाली ॥ ७ ॥
तत्पट्टमेरावुदियाय भानु-र्जैनागमाब्धिं परिमथ्य कोशम् ।
राजेन्द्रसूरिर्जगदर्चनीयो-ऽभिधानराजेन्द्रमसावकार्षीत् ॥ ८ ॥

अस्मत्पट्टप्रभावी धनविजयमुनिर्वादिवृन्दप्रजेता,
श्रीलोपाध्यायवर्यः प्रतिसमयमदाद् भूरिसाहाय्यमेषः ।
कोशाब्धेरस्य सृष्टौ सकलजनपदश्लाघनीयत्वलिप्सोः,
सद्विद्वन्मानसाब्जे दिनकरसमतां यास्यमानस्य लोके ॥ ९ ॥
धन्वन्यन्तर्कयुगाङ्कपृथ्वी-वर्षे सियाणानगरेऽस्य सृष्टिः ।
पूर्णोऽभवत् सूर्यपुरे ह्यविघ्नं, शून्याङ्कनिध्येकमिते सुवर्षे ॥ १० ॥
तावन्महान् प्राकृतकोश एष, यावत् क्षितौ मेरुरवीन्दवः स्युः ।
सज्जैनजैनेतरविज्ञवर्ग-मानन्दयेत् कोकमिवोष्णरश्मिः ॥ ११ ॥

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-
श्रीमद्भट्टारक-जैन श्वेताम्बराऽऽचार्य श्री श्री १००८ श्री
मद्विजयराजेन्द्रसूरीश्वरविरचिते 'श्रीअभिधानराजेन्द्र-
प्राकृतमहाकोशे' हकारादिशब्दसङ्कलनं समाप्तम् ।

**तत्समाप्तौ च समाप्तश्चायं ग्रन्थः ।**

## अथ मुद्रणपरिचयः-

निर्ग्रन्थगच्छः समभूत्सुधर्माऽऽख्यात्सुस्थिताऽऽर्यादथ कोटिकाऽऽह्वः ।
चन्द्रोऽपि चन्द्रप्रभ-चन्द्रसूरेः, सामन्तभद्राद् वनवासिगच्छः ॥ १ ॥
श्रीसर्वदेवाद् वट आविरासीत्, तपा जगच्चन्द्रमुनीन्द्रवर्यात् ।
सौधर्मसंयुक्तबृहत्तपाऽऽख्यो, राजेन्द्रसूरेर्जगति प्रसिद्धः ॥ २ ॥ युग्मकम् ।

एतद्गच्छसुशासनीयसुधुरप्रोद्वाहिसूरिव्रजाऽ-
लङ्कारायितसाधुकर्म विधिवत्पंशोधकस्याऽऽज्ञया ।
आजन्माऽनघशीलशोभिततनो राजेन्द्रसूरीशितुः,
संघातान्तिमया विनेयनिवहैः संशोध्य मुद्रापितः ॥ ३ ॥
व्याख्यानी सच्चरित्रः सुबुधगणनतः सेवितः साधुवर्गै-
र्जैनाचार्यः क्रियावान् हि विजयधनचन्द्रोऽस्य पट्टेऽधि[illegible]के ।
दान्ते क्षान्ते महान्ते प्रशमितहृदये संयमे सच्चरित्रे,
सौम्ये रम्ये गभीरे सकलजनहिते वर्त्तमाने सदाऽसौ ॥ ४ ॥
चन्द्राशाङ्ककलाधिनाथसहिते वर्षेऽसिते पक्षके,
चैत्रे मासि धरासुतस्य दिवसे ज्येष्ठाख्यतारायुते ।
सप्तम्यां रतलामनामकपुरे भूपेन्द्रसूरीश्वरे,
राजत्येष सुसाधु मुद्रणमितो राजेन्द्रकोषः शुभः ॥५॥